अथ

# चाणिक्य नीति-शास्त्रम्

विरजानन्द यन्त्रालये मुद्रितम्

संब्बत् १९४५ बिक्रमी

# THE ELEMENTS OF POLITY

BY

CHANIKYA

LAHORE

PRINTED & PUBLISHED BY DURGA

VIRAJANAND PRE

1888.

# शुद्धि पत्रम्।

| अध्याय | श्लोक | अशुद्धि | शुद्धि |
|---|---|---|---|
| १ | २ | शुभाशुम् | शुभाशुभम् |
| २ | १४ | रिणस्य | ऋणस्य |
| २ | १८ | मैत्री | मित्र |
| ३ | २१ | स्त्री | स्त्री: |
| ४ | ५ | मात्र | मात्र |
| ४ | ७ | स्तसत्र | स्तत्सु |
| ४ | ९ | वाजीनां | वाजिनां |
| ४ | १८ | समदशिना: | समदर्शिन: |
| ५ | ११ | नाशनी | नाशिनी |
| ५ | २३ | पत्नी | पत्नी |
| ६ | १० | स्त्री कृतं | स्त्रीकृत पापं |
| ६ | १४ | अध्यापतय: | अध्याप्रयत: |
| ७ | ३ | सन्तौषा: | सन्तोषा |
| ७ | १२ | पादापा: | पादपा: |
| ७ | १५ | पस्यार्थ: | पस्यार्थ |
| ७ | १६ | दानं | दात |
| ८ | ४ | गच्छे [illegible] | गच्छन्त |

| अध्याय | श्लोक | अशुद्धि | शुद्धि |
|---|---|---|---|
| ८ | ५ | पवनापर: | पवनात्पर: |
| ८ | ६ | चाडोलो | चाण्डालो |
| ९ | १ | शोचं | शौचं |
| ९ | २ | वल्मिकी | वल्मीको |
| ९ | ६ | पन्या: | पान्या: |
| ९ | ११ | गच्छति | गच्छत्य |
| १० | १ | होन: | हीन: |
| १० | २ | वांच्य | वाक्य |
| १० | ३ | वद्या | विद्या |
| १० | ४ | खादाश्नि | खादन्ति |
| १० | ६ | मूर्खानां | मूर्खाणां |
| १० | ६ | बोधको | बाधको |
| १० | ८ | स्वन्द्र | स्वन्द |
| १० | ११ | भये | भवे |
| १० | १७ | दभकीज | दर्भकजी |
| १० | १७ | कलों | काली |
| १२ | १ | आतिथ्य | आतिथ्यं |
| १२ | ५ | कीर्तिन | कीर्त्तन |
| १२ | ६ | मेधस्य | मेघस्य |
| १२ | ७ | खलनां | खलानां |
| १२ | ७ | सधुनां | साधूनां |
| १२ | ८ | सधुनां | साधूनां |
| १२ | ११ | पत्नी | पत्नी |
| १२ | १५ | न्ति | ति |

| अध्याय | शुद्धि | अशुद्धि | शुद्धि |
|---|---|---|---|
| १४ | ८ | स्रो | स्यो |
| १४ | १० | पंति | यंति |
| १४ | १४ | कार्त्तुं | कर्तुं |
| १४ | १५ | पा | प |
| १५ | १६ | च्च | च्च |
| १५ | ३ | ख | च |
| १५ | १७ | ष्क | ष्कि |
| १५ | १८ | त्यजांति | त्यजन्ति |

---

विरजानन्द यन्त्रालय लाहौर।

# चाणक्यनीतिदर्पणः प्रारभ्यते ।

## प्रथमोऽध्यायः ।

प्रणम्य शिरसा विष्णुं त्रैलोक्याधिपतिं प्रभुम् ।
नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ॥ १ ॥
अधीत्येदं यथाशास्त्रं नरो जानाति सत्तमः ।
धर्मोपदेशविख्यातं कार्य्याकार्य्यशुभाशुभम् ॥ २ ॥
तदहं सम्प्रवक्ष्यामि लोकानां हितकाम्यया ।
यस्य विज्ञानमात्रेण सर्वज्ञत्वं प्रपद्यते ॥ ३ ॥
मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च ।
दुःखितैः संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ४ ॥
दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ५ ॥
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ६ ॥
आपदर्थे धनं रक्षेच्छ्रीमतश्च किमापदः ।
कदाचिच्चलिता लक्ष्मीः संचितापि विनश्यति ॥ ७ ॥

यस्मिन् देशे न सम्मानो न वृत्तिर्न च बान्धवः ।
न च विद्यागमोऽप्यस्ति वासं तत्र न कारयेत् ॥ ८ ॥
धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ ९ ॥
लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता ।
पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र सङ्गतिम् ॥ १० ॥
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ।
मित्रञ्चापत्तिकाले तु भार्य्यां च विभवक्षये ॥ ११ ॥
आतुरे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ १२ ॥
यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥ १३ ॥
वरयेत्कुलजां प्राज्ञो विरूपामपि कन्यकाम् ।
रूपशीलां न नीचस्य विवाहः सदृशे कुले ॥ १४ ॥
नदीनां शस्त्रपाणीनां नखीनां शृङ्गिणां तथा ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ १५ ॥
विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १६ ॥
स्त्रीणां द्विगुण आहारो लज्जा चापि चतुर्गुणा ।
साहसं षड्गुणं चैव कामश्चाष्टगुणः स्मृतः ॥ १७ ॥

## द्वितीयोऽध्यायः ।

अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचत्वं निर्दयत्वं स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥
भोज्यं भोजनशक्तिश्च रतिशक्ति वराङ्गना ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ २ ॥
यस्य पुत्रो वशीभूतो भार्य्या छन्दानुगामिनी ।
विभवे यश्च सन्तुष्टस्तस्य स्वर्ग इहैव हि ॥ ३ ॥
ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः ।
तन्मित्रं यत्र विश्वासः सा भार्य्या यत्र निर्वृतिः ॥ ४ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्ज्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ५ ॥
न विश्वसेत् कुमित्रे च मित्रे चापि न विश्वसेत् ।
कदाचित् कुपितं मित्रं सर्वगुह्यं प्रकाशयेत् ॥ ६ ॥
मनसा चिन्तितं कार्य्यं वाचा नैव प्रकाशयेत् ।
मन्त्रेण रक्षयेत् गूढं कार्य्यञ्चापि नियोजयेत् ॥ ७ ॥
कष्टञ्च खलु मूर्खत्वं कष्टञ्च खलु यौवनम् ।
कष्टात् कष्टतरं चैव परगेहे निवासनम् ॥ ८ ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥ ९ ॥

पुत्राश्च विविधैः शीलै र्नियोज्याः सततं बुधैः ।
नीतिज्ञाः शीलसम्पन्ना भवन्ति कुलपूजिताः ॥ १० ॥
माता रिपुः पिता शत्रुर्बालो येन न पाठ्यते ।
सभामध्ये न शोभन्ते हंसमध्ये बको यथा ॥ ११ ॥
लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः ।
तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्न तु लालयेत् ॥ १२ ॥
श्लोकेन वा तदर्द्धेन तदर्द्धार्द्धाक्षरेण च ।
अबन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मभिः ॥ १३ ॥

कांतावियोगः स्वजनापमानो
ऋणस्य शेषः कुनृपस्य सेवा ।
दरिद्रभावो विषमा सभा च
विनाग्निमेते प्रदहन्ति कायम् ॥ १४ ॥

नदीतीरे च ये वृक्षाः परगेहेषु कामिनी ।
मंत्रिहीनाश्च राजानः शीघ्रं नश्यन्त्यसंशयम् ॥ १५ ॥
बलं विद्या च विप्राणां राज्ञां सैन्यं बलं तथा ।
बलं वित्तञ्च वैश्यानां शूद्राणां च कनिष्ठिका ॥ १६ ॥
निर्धनं पुरुषं वेश्या प्रजा भग्नं नृपन्त्यजेत् ।
खगा वीतफलं वृक्षं भुक्त्वा अभ्यागता गृहम् ॥ १७ ॥
गृहीत्वा दक्षिणां विप्रास्त्यजन्ति यजमानकम् ।
प्राप्तविद्या गुरुं शिष्या दग्धारण्यं मृगास्तथा ॥ १८ ॥

दुराचारी दुरादृष्टि दुंरावासी च दुर्जनः ।
यत् मित्रं क्रियते पुम्भि र्नरः शीघ्रं विनश्यति ॥ १९ ॥
समाने शोभते प्रीती राज्ञि सेवा च शोभते ।
वाणिज्यं व्यवहारेषु स्त्री दिव्या शोभते गृहे ॥ २० ॥

---

## तृतीयोऽध्यायः ।

कस्य दोषः कुले नास्ति व्याधिना के न पीडिताः ।
व्यसनं केन न प्राप्तं कस्य सौख्यं निरन्तरम् ॥ १ ॥
आचारः कुलमाख्याति देशमाख्याति भाषणम् ।
संभ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ २ ॥
सुकुले योजयेत् कन्यां पुत्रं विद्या सुयोजयेत् ।
व्यसने योजयेच्छत्रुं मित्रं धर्मेण योजयेत् ॥ ३ ॥
दुर्जनस्य च सर्पस्य वरं सर्पो न दुर्जनः ।
सर्पो दंशति काले तु दुर्जनस्तु पदे पदे ॥ ४ ॥
एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् ।
आदिमध्यावसानेषु न त्यजन्ति च ते नृपम् ॥ ५ ॥
प्रलये भिन्नमर्य्यादा भवन्ति किल सागराः ।
सागरा भेदमिच्छन्ति प्रलयेऽपि न साधवः ॥ ६ ॥

मूर्खस्तु परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः ।
भिनत्ति वाक्यशल्येन अदृष्टं कण्टकं यथा ॥ ७ ॥
रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गंधा इव किंशुकाः ॥ ८ ॥
कोकिलानां स्वरो रूपं स्त्रीणां रूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ९ ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १० ॥
उद्योगे नास्ति दारिद्र्यं जपतो नास्ति पातकम् ।
मौने च कलहो नास्ति नास्ति जागरिते भयम् ॥ ११
अतिरूपेण वै सीता अतिगर्वेण रावणः ।
अतिदानाद्बलिर्बद्धो ह्यति सर्वत्र वर्जयेत् ॥ १२ ॥
को हि भारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ १३
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ १४ ॥
एकेन शुष्कवृक्षेण दह्यमानेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥ १५ ॥
एकेनापि सुपुत्रेण विद्यायुक्तेन साधुना ।
आल्हादितं कुलं सर्वं यथा चन्द्रेण शर्वरी ॥ १६ ॥

किं जातैर्बहुभिः पुत्रैः शोकसन्तापकारकैः ।
वरमेकः कुलालम्बी यत्र विश्राम्यते कुलम् ॥ १७ ॥
लालयेत् पञ्चवर्षाणि दशवर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रे मित्रत्वमाचरेत् ॥ १८ ॥
उपसर्गेऽन्यचक्रे च दुर्भिक्षे च भयावहे ।
असाधुजनसम्पर्के यः पलायति स जीवति ॥ १९ ॥
धर्मार्थकाममोक्षेषु यस्य कोऽपि न विद्यते ।
जन्मजन्मनि मर्त्येषु मरणं तस्य केवलम् ॥ २० ॥
मूर्खा यत्र न पूज्यन्ते धान्यं यत्र सुसञ्चितम् ।
दाम्पत्ये कलहो नास्ति तत्र श्रीः स्वयमागता ॥ २१ ॥

---

## चतुर्थोऽध्यायः ।

आयुः कर्म च वित्तञ्च विद्या निधनमेव च ।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ १ ॥
साधुभ्यस्ते निवर्तन्ते पुत्रा मित्राणि बान्धवाः ।
ये च तैः सह गन्तारस्तद्धर्मात् सुकृतं कुलम् ॥ २ ॥
दर्शनध्यानसंस्पर्शैर्मत्सी कूर्मी च पक्षिणी ।
शिशुम्पालयते नित्यं तथा सज्जनसङ्गतिः ॥ ३ ॥
यावत् स्वस्थो ह्ययं देहो यावन् मृत्युश्च दूरतः ।
तावदात्महितं कुर्यात् प्राणान्ते किं करिष्यति ॥ ४ ॥

कामधेनुगुणा विद्या ह्यकाले फलदायिनी ।
प्रवासे मातृसदृशी विद्या गुप्तं धनं स्मृतम् ॥ ५ ॥
कोऽपि गुणवान् पुत्रो निर्गुणैश्च शतैर्वरः ।
एकश्चन्द्रस्तमो हन्ति न च ताराः सहस्रशः ॥ ६ ॥
मूर्खश्चिरायुर्जातोऽपि तस्माज्जातमृतो वरः ।
मृतस्य चाल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ७ ॥

कुग्रामवासः कुलहीनसेवा,
कुभोजनं क्रोधमुखी च भार्य्या ।
पुत्रश्च मूर्खो विधवा च कन्या,
विनाग्निना षट् प्रदहन्ति कायम् ॥ ८ ॥

किन्तया क्रियते धेन्वा या न दोग्ध्री न गुर्विणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान् ॥ ९ ॥
संसारतापदग्धानां त्रयो विश्रान्तिहेतवः ।
अपत्यञ्च कलत्रञ्च सतां सङ्गतिरेव च ॥ १० ॥
सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः ।
सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥ ११ ॥
एकाकिना तपो द्वाभ्यां पठनं गायनं त्रिभिः ।
चतुर्भिर्गमनं चैव पञ्चभिर्बहुभी रणम् ॥ १२ ॥
सा भार्य्या या शुचिर्दक्षा सा भार्य्या या पतिव्रता ।
सा भार्य्या या पतिप्रीता सा भार्य्या सत्यवादिनी ॥ १३

अपुत्रस्य गृहं शून्यं दिशः शून्यास्त्व बान्धवाः ।
मूर्खस्य हृदयं शून्यं सर्वशून्या दरिद्रता ॥ १४ ॥
अनभ्यासे विषं शास्त्रमजीर्णे भोजनं विषम् ।
दरिद्रस्य विषं गोष्ठी वृद्धस्य तरुणी विषम् ॥ १५ ॥
त्यजेद्धर्मं दयाहीनं विद्याहीनं गुरुन्त्यजेत् ।
त्यजेत् क्रोधमुखीं भार्य्यान्निःस्नेहान्बान्धवांस्त्यजेत् १६
अध्वा जरा मनुष्याणां वाजीनं बन्धनं जरा ।
अमैथुनं जरा स्त्रीणां वस्त्राणा मातपो जरा ॥ १७ ॥
कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कस्याहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १८ ॥
अग्नि र्देवो द्विजातीनां मुनीनां हृदि दैवतम् ।
प्रतिमा स्वल्पबुद्धीनां सर्वत्र समदर्शिनः ॥ १९ ॥

---

## पञ्चमोऽध्यायः ।

पतिरेव गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ।
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ॥ १ ॥
यथा चतुर्भिः कनकं परीक्ष्यते,
निघर्षण छेदनतापताडनैः ।

तथा चतुर्भिः पुरुषः परीक्ष्यते ।
त्यागेन शीलेन गुणेन कर्मणा ॥ २ ॥
तावद् भयेषु भेतव्यं यावद्भय मनागतम् ।
आगतन्तु भयं दृष्ट्वा प्रहर्तव्यमशङ्कया ॥ ३ ॥
एकोदरसमुद्भूता एकनक्षत्रजातकाः ।
न भवन्ति समाः शीले यथा बदरिकण्टकाः ॥ ४ ॥
निःस्पृही नाधिकारी स्यान्नाकामी मण्डनप्रियः ।
नाविदग्धः प्रियं ब्रूयात् स्पष्टवक्ता न वञ्चकः ॥ ५ ॥
मूर्खाणां पण्डिता द्वेष्या अधनानां महाधनाः ।
वराङ्गना कुलस्त्रीणां सुभगानां च दुर्भगाः ॥ ६ ॥
आलस्योपहृता विद्या परहस्तगतं धनम् ।
अल्पबीजं हतं चेव हतं सैन्य मनायकम् ॥ ७ ॥
अभ्यासाद्धार्य्यते विद्या कुलं शीलेन धार्य्यते ।
गुणेन ज्ञायते त्वार्य्यः कोपो नेत्रेण गम्यते ॥ ८ ॥
वित्तेन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृदुना रक्ष्यते भूपः सत्स्त्रिया रक्ष्यते गृहम् ॥ ९ ॥
अन्यथा वेदपाण्डित्यं शास्त्रमाचार मन्यथा ।
अन्यथा यद्वदन् शान्तं लोकाः क्लिश्यन्ति चान्यथा ॥१०
दारिद्र्यनाशनं दानं शीलं दुर्गतिनाशनम् ।
अज्ञाननाशनी प्रज्ञा भावना भयनाशिनी ॥११ ॥

नास्ति कामसमो व्याधि र्नास्ति मोहसमो रिपुः ।
नास्ति कोपसमो वन्हि र्नास्ति ज्ञानात्परं सुखम् ॥ १२ ॥
जन्ममृत्यू हि यात्येको भुनक्त्येकः शुभाशुभम् ।
नरकेषु पतत्येक एको याति पराङ्गतिम् ॥ १३ ॥
तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् ।
जिताक्षस्य तृणं नारी निस्पृहस्य तृणं जगत् ॥ १४ ॥
विद्या मित्रं प्रवासेषु भार्य्या मित्रं गृहेषु च ।
व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ १५ ॥
वृथा वृष्टिः समुद्रेषु वृथा तृप्तेषु भोजनम् ।
वृथा दानं धनाढ्येषु वृथा दीपो दिवापि च ॥ १६ ॥
नास्ति मेघसमन्तोयं नास्ति चात्मसमम्बलम् ।
नास्ति चक्षुःसमं तेजो नास्ति चान्नसमं प्रियम् ॥ १७ ॥
अधना धनमिच्छन्ति वाचं चैव चतुष्पदाः ।
मानवाः स्वर्गमिच्छन्ति मोक्ष मिच्छन्ति देवताः ॥ १८
सत्येन धार्य्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वाति वायुश्च सर्वं सत्ये प्रतिष्ठितं ॥ १९ ॥
चला लक्ष्मीश्चलाः प्राणाश्चले जीवितमन्दिरे ।
चलाचले च संसारे धर्म एको हि निश्चलः ॥ २० ॥
नराणां नापितो धूर्तः पक्षिणां चैव वायसः ।
चतुष्पदां शृगालस्तु स्त्रीणां धूर्ता च मालिनी ॥ २१ ॥

जनिता चोपनीता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ २२ ॥
राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च ।
पत्नी माता स्वमाता च पञ्चैता मातरः स्मृताः ॥ २३

---

## षष्ठोऽध्यायः ।

श्रुत्वा धर्म्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् ।
श्रुत्वा ज्ञान मवाप्नोति श्रुत्वा मोक्षमवाप्नुयात् ॥ १ ॥
पक्षिणां काकश्चाण्डालः पशूनाञ्चैव कुक्कुरः ।
मुनीनां पापश्चाण्डालः सर्वचाण्डालो निंदकः ॥ २ ॥
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।
रजसा शुध्यते नारी नदी वेगेन शुध्यति ॥ ३ ॥
भ्रमन् संपूज्यते राजा भ्रमन् संपूज्यते द्विजः ।
भ्रमन् संपूज्यते योगी स्त्री भ्रमन्ती विनश्यति ॥ ४ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाल्लोके यस्यार्थाः स च पण्डितः ॥ ५ ॥
तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः ।
सहायास्तादृशा एव यादृशी भवितव्यता ॥ ६ ॥

कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ ७ ॥
न पश्यति च जन्मान्धः कामान्धो नैव पश्यति ।
मदोन्मत्ता न पश्यन्ति अर्थी दोषन्नपश्यति ॥ ८ ॥
स्वयं कर्म्म करोत्यात्मा स्वयं तत्फल मश्नुते ।
स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥ ९ ॥
राजा राष्ट्रकृतं पापं राज्ञः पापं पुरोहितः ।
भर्ता च स्त्रीकृतं शिष्यपापं गुरुस्तथा ॥ १० ॥
ऋणकर्ता पिता शत्रु र्माता च व्यभिचारिणी ।
भार्य्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ ११ ॥
लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्म्मणा ।
मूर्खं छन्दानुवृत्त्या च यथार्थत्वेन पण्डितम् ॥ १२ ॥

वरं न राज्यं न कुराजराज्यं
वरं न मित्रं न कुमित्रमित्रम् ।
वरं न शिष्यो नकुशिष्यशिष्यो
वरं न दारा न कुदारदारा ॥ १३ ॥
कुराजराज्येन कुतः प्रजासुखं
कुमित्रमित्रेण कुतोऽभिनिर्वृतिः ।
कुदारदारैश्च कुतो गृहे रतिः
कुशिष्यमध्यापयतः कुतो यशः ॥ १४ ॥

सिंहादेकं वकादेकं शिक्षेच्चत्वारि कुक्कुटात् ।
वायसात्पञ्च शिक्षेच षट् शुनस्त्रीणि गर्दभात् ॥ १५ ॥
प्रभूतं कार्य्यमल्पं वा यन्नरः कर्त्तुमिच्छति ।
सर्व्वारम्भेण तत्कार्य्यं सिंहादेकं प्रचक्षते ॥ १६ ॥
इन्द्रियाणि च संयम्य वकवत्पण्डितो नरः ।
देशकालबलं ज्ञात्वा सर्व कार्य्याणि साधयेत् ॥ १७ ॥
प्रत्युत्थानं च युद्धं च संविभागश्च बन्धुषु ।
स्वयमाक्रम्य भोगञ्च शिक्षेच्चत्वारि कुक्कुटात् ॥ १८ ॥
गूढं मैथुनचारित्वं काले कालेच सङ्ग्रहम् ।
अप्रमत्त मविश्वासं पञ्च शिक्षेच्च वायसात् ॥ १९ ॥
वह्वाशी स्वल्प सन्तुष्टः सुनिद्रो लघुचेतनः ।
स्वामिभक्तश्च शूरश्च षडेते श्वानतो गुणाः ॥ २० ॥
सुश्रान्तोऽपि वहेद्भारं शीतोष्णं न च पश्यति ।
सन्तुष्टश्चरते नित्यं त्रीणि शिक्षेच्च गर्दभात् ॥ २१ ॥
य एतान् विंशति गुणानाचरिष्यति मानवः ।
कार्य्यावस्थासु सर्वासु अजेयः स भविष्यति ॥ २२ ॥

---

## सप्तमोऽध्यायः ।

अर्थनाशं मनस्तापं गृहिणीचरितानि च ।
नीचवाक्यं चापमानं मतिमान् न प्रकाशयेत् ॥ १ ॥
धनधान्यप्रयोगेषु विद्या संग्रहणेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ २ ॥
सन्तोषामृततृप्तानां यत् सुखं शान्ति रेव च ।
न च तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ३ ॥
सन्तोष स्त्रिषु कर्तव्यः स्वदारे भोजने धने ।
त्रिषु चैव न कर्तव्यो ऽध्ययने जपदानयोः ॥ ४ ॥
विप्रयो विप्रवह्न्योश्च दम्पत्योः स्वामिभृत्ययोः ।
अन्तरेण न गन्तव्यं हलस्य वृषभस्य च ॥ ५ ॥
पादाभ्यां न स्पृशेदग्निं गुरुं ब्राह्मण मेव च ।
नैव गां न कुमारीं च न वृद्ध शिशुन्तथा ॥ ६ ॥
शकटं पञ्च हस्तेन दश हस्तेन वाजिनम् ।
हस्ती शत सहस्रेण देश त्यागेन दुर्जनः ॥ ७ ॥
हस्ती अङ्कुशमात्रेण वाजी हस्तेन ताड्यते ।
शृङ्गी लगुडहस्तेन खड्गहस्तेन दुर्जनः ॥ ८ ॥
तुष्यन्ति भोजने विप्रा मयूरा घनगर्जिते ।
साधवः परसम्पत्तौ खलाः परविपत्तिषु ॥ ९ ॥

अनुलोमेन बलिनं प्रतिलोमेन दुर्ज्जनम् ।
आत्मतुल्यबलं शत्रुं विनयेन बलेन वा ॥ १० ॥
बाहुवीर्य्यं बलं राज्ञो ब्राह्मणो ब्रह्मविद्बली ।
रूपयौवनमाधुर्य्यं स्त्रीणां बलमनुत्तमम् ॥ ११ ॥
नात्यन्तं सरलै भाव्यं गत्वा पश्य वनस्थलीम् ।
छिद्यंते सरलास्तत्र कुब्जास्तिष्ठन्ति पादपाः ॥ १२ ॥

यत्रोदकं तत्र वसन्ति हंसा
स्तथैव शुष्कं परिवर्जयन्ति ।
न हंसतुल्येन नरेण भाव्यं
पुनस्त्यजंतः पुनराश्रयन्तः ॥ १३ ॥

उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परिस्रव इवाम्भसाम् ॥ १४ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थः सपुमांल्लोके यस्यार्थः स च जीवति ॥ १५ ॥

स्वर्गस्थितानामिह जीव लोके
चत्वारि चिह्नानि वसंति देहे ।
दानप्रसङ्गो मधुरा च वाणी
देवार्चनं ब्राह्मणतर्पणञ्च ॥ १६ ॥

अत्यन्त कोपः कटुका च वाणी
दरिद्रता च स्वजनेषु वैरम् ।
नीचप्रसङ्गः कुलहीनसेवा
चिन्हानि देहे नरकस्थितानाम् ॥ १७ ॥
गम्यते यदि मृगेन्द्र मन्दिरं,
लभ्यते करि कपोल मौक्तिकम्
जम्बु कालयगते च प्राप्यते
वत्सपुच्छखरचर्मखण्डनम् ॥ १८ ॥
श्वनः पुच्छमिव व्यर्थं जीवितं विद्यया विना ।
न गुह्यगोपने शक्तं न च दंशनिवारणे ॥ १९ ॥
वाचां शौचं च मनसः शौचमिन्द्रियनिग्रहः ।
सर्वभूतदयाशौचमेतच्छौचं परार्थिनाम् ॥ २० ॥
पुष्पे गन्धं तिले तैलं काष्ठे वन्हिं पयो घृतम् ।
इक्षौ गुडं तथा देहे पश्यात्मानं विवेकतः ॥ २१ ॥

---

## अष्टमोऽध्यायः ।

अधमा धन मिच्छन्ति धनं मानं च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १ ॥

इक्षुरापः पयो मूलं तांबूलं फलमौषधम् ।
भक्षयित्वापि कर्तव्याः स्नानदानादिकाः क्रियाः ॥ २ ॥
दीपो भक्षयते ध्वांतं कज्जलं च प्रसूयते ।
यदन्नं भक्ष्यते नित्यं जायते तादृशी प्रजा ॥ ३ ॥
वित्तं देहि गुणान्वितेषु मतिमन् नान्यत्र देहि क्वचित्
प्राप्तं वारिनिधेर्जलं घनमुखे माधुर्य्ययुक्तं सदाजीवन् ।
स्थावरजङ्गमांश्च सकलान् सञ्जीव्य भूमण्डलं
भूयः पश्यति देवकोटिगुणितं गच्छेन्तमंभोनिधिं ॥ ४
चांण्डालानां सहस्रैश्च सूरिभिस्तत्वदर्शिभिः ।
एको हि यवनः प्रोक्तो न नीचो यवनापरः ॥ ५ ॥
तैलाभ्यंगे चिताधूमे मैथुने चौरकर्म्मणि ।
तावद्भवति चाण्डालो यावत् स्नानं समाचरेत् ॥ ६ ॥
अजीर्णे भेषजम्वारि जीर्णे वारिबलप्रदम् ।
भोजने चामृतम्वारि भोजनान्ते विषप्रदम् ॥ ७ ॥
हतं ज्ञानं क्रियाहीनं हतश्चाज्ञानतो नरः ।
हतं निर्नायकं सैन्यं स्त्रियो नष्टा ह्यभर्तृकाः ॥ ८ ॥
वृद्धकाले मृता भार्य्या बन्धुहस्तगतन्धनम् ।
भोजनञ्च पराधीनं तिस्रः पुंसां विडम्बना ॥ ९ ॥
अग्निहोत्रं विना वेदा न च दानं विना क्रिया ।
न भावेन विना सिद्धिः स्तस्माद्भावो हि कारणम् ॥ १०

काष्ठपाषाणधातूनां कृत्वा भावेन सेवनम् ।
श्रद्धया च तथा सिद्धिस्तस्य विष्णोः प्रसादतः ॥ ११ ॥
न देवो विद्यते काष्ठे न पाषाणे न मृन्मये ।
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम् ॥ १२ ॥
शांतितुल्यं तपो नास्ति न संतोषात्परं सुखम् ।
न तृष्णायाः परो व्याधिर्न च धर्मो दयापरः ॥ १३ ॥
क्रोधो वैवस्वतो राजा तृष्णा वैतरणी नदी ।
विद्या कामदुघा धेनुः सन्तोषो नन्दनं वनम् ॥ १४ ॥
गुणो भूषयते रूपं शीलं भूषयते कुलम् ।
सिद्धि भूषयते विद्यां भोगो भूषयते धनम् ॥ १५ ॥
निर्गुणस्य हतं रूपं दुःशीलस्य हतं कुलम् ।
असिद्धस्य हता विद्या अभोगेन हतं धनम् ॥ १६ ॥
शुद्धं भूमिगतं तोयं शुद्धा नारी पतिव्रता ।
शुचिः क्षेमकरो राजा सन्तुष्टो ब्राह्मणः शुचिः ॥ १७ ॥
असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभृतः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलांगनाः ॥ १८ ॥
किं कुलेन विशालेन विद्याहीनेन देहिनाम् ।
दुष्कुलं चापि विदुषो देवैरपि सुपूज्यते ॥ १९ ॥
विद्वान् प्रशस्यते लोके विद्वान् सर्वत्र गौरवम् ।
विद्यया लभते सर्वं विद्या सर्वत्र पूज्यते ॥ २० ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभंते निर्गंधा इव किंशुकाः ॥ २१ ॥

मांसभक्षैः सुरापानै मूर्खैश्चाक्षरवर्जितैः ।
पशुभिः पुरुषाकारै र्भाराक्रांतास्ति मेदिनी ॥ २२ ॥

अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनश्च ऋत्विजः ।
यजमानं दानहीनो नास्ति यज्ञसमो रिपुः ॥ २३ ॥

---

## नवमोऽध्यायः ।

मुक्तिमिच्छसि चेत् तात विषयान् विषवत्त्यज ।
क्षमार्ज्जवदयाशौचं सत्यं पीयूषवत्पिव ॥ १ ॥

परस्परस्य मर्माणि ये भाषंते नराधमाः ।
त एव विलयं यांति वल्मिकोदरसर्पवत् ॥ २ ॥

गन्धं सुवर्णं फलमिक्षुदण्डे
नाकारि पुष्पं खलु चन्दनस्य ।
विद्वान् धनी नृपति दीर्घजीवी
धातुः पुरा कोऽपि न बुद्धिदोऽभूत् ॥ ३ ॥

सर्वौषधीनाममृता प्रधाना
सर्वेषु सौख्येष्वशनं प्रधानम् ।
सर्वेन्द्रियाणां नयनं प्रधानम्
सर्वेषु गात्रेषु शिरः प्रधानम् ॥ ४ ॥
दूतो न संचरति खे न चलेच्च वार्ता
पूर्वं न जल्पितमिदं न च संगमोऽस्ति ।
व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तम्
जानाति यो द्विजवरः स कथं न विद्वान् ॥ ५

विद्यार्थी सेवकः पान्थः क्षुधार्तो भयकातरः ।
भांडारी प्रतिहारी च सप्त सुप्तान् प्रबोधयेत् ॥ ६ ॥
अहिं नृपं च शार्दूलं वृटिं च बालकं तथा ।
परश्वानं च मूर्खं च सप्त सुप्तान्न बोधयेत् ॥ ७ ॥
अर्थाधीताश्च यैर्वेदास्तथा शूद्रान्नभोजिनः ।
ते द्विजाः किं करिष्यन्ति निर्विषा इव पन्नगाः ॥ ८ ॥
यस्मिन् रुष्टे भयं नास्ति तुष्टे नैव धनागमः ।
निग्रहोऽनुग्रहो नास्ति स रुष्टः किं करिष्यति ॥ ९ ॥
निर्विषेणापि सर्पेण कर्तव्या महती फणा ।
विषमस्तु न चाप्यस्तु फटाटोपो भयङ्करः ॥ १० ॥
प्रातर्द्यूत प्रसंगेन मध्याह्ने स्त्रीप्रसंगतः ।
रात्रौ चौरप्रसंगेन कालो गच्छति धीमताम् ॥ ११ ॥

स्वहस्तग्रथिता माला स्वहस्तघृष्टचन्दनम् ।
स्वहस्तलिखितं स्तोत्रं शक्रस्यापि श्रियं हरेत् ॥ १२ ॥

इक्षुदंडास्तिला: शूद्रा: कान्ता हेमस्वमेदिनी ।
चंदनं दधि तांबूलं मर्दनं गुणवर्द्धनम् ॥ १३ ॥

दरिद्रता धीरतया विराजते
कुवस्त्रता शुभ्रतया विराजते ।
कदन्नता चोष्णतया विराजते
कुरूपता शीलयुता विराजते ॥ १४ ॥

---

दशमोऽध्याय: ।

धनहीनो न हीनश्च धनिक: स सुनिश्चय: ।
विद्यारत्नेन यो हीन: स हीन: सर्ववस्तुषु ॥ १ ॥

दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतं वदेद् वाक्यं मन:पूतं समाचरेत् ॥ २ ॥

सुखार्थी चेत् त्यजेद्विद्यां वद्यार्थी चेत् त्यजेत् सुखं ।
सुखार्थिन: कुतो विद्या सुखं विद्यार्थिन: कुत: ॥ ३ ॥

कवयः किं न पश्यन्ति किं न कुर्वन्ति योषितः ।
मद्यपाः किं न जल्पन्ति किं न खादन्ति वायसाः ॥ ४

रंकं करोति राजानं राजानं रंकमेव च ।
धनिनं निर्धनं चैव निर्धनं धनिनं विधिः ॥ ५ ॥

लुब्धानां याचकः शत्रु मूर्खानां बोधको रिपुः ।
जारस्त्रीणां पतिः शत्रु चौराणां चंद्रमा रिपुः ॥ ६ ॥

येषां न विद्या न तपो न दानं
न चापि शीलं न गुणो न धर्मः ।
ते मर्त्य लोके भुविभारभूता
मनुष्य रूपेण मृगाश्चरन्ति ॥ ७ ॥

अन्तःसारविहीनानामुपदेशो न जायते ।
मलयाचलसंसर्गान्न वेणु श्चन्दनायते ॥ ८ ॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणं किं करिष्यति ॥ ९ ॥

दुर्ज्जनं सज्जनं कर्तु मुपायो नहि भूतले ।
अपानं शतधा धौतं न श्रेष्टमिंद्रियं भवेत् ॥ १० ॥

आत्मद्वेषाद्भवेन्मृत्युः परद्वेषाद्धनक्षयः ।
राजद्वेषाद्भवेन्नाशो ब्रह्मद्वेषात् कुलक्षयः ॥ ११ ॥

वरं वनं व्याघ्रगजेन्द्र सेवितम्
द्रुमालये पत्रफलाम्बु सेवनम् ।
तृणेषु शय्या शतजीर्णवल्कलम्
न बंधु मध्ये धनहीन जीवनम् ॥ १२ ॥

विप्रो वृक्षस्तस्य मूलं च संध्या
वेदः शाखा धर्मकर्माणि पत्रम् ।
तस्मान्मूलं यत्नतो रक्षणीयम्
छिन्ने मूले नैव शाखा न पत्रम् ॥ १३ ॥

माता च कमला देवी पिता देवो जनार्दनः ।
बांधवा विष्णुभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १४ ॥

एकवृक्षसमारुढा नानावर्णा विहंगमाः ।
प्रभाते दिक्षु दशसु का तत्र परिदेवना ॥ १५ ॥

बुद्धि र्यस्य बलं तस्य निर्बुद्धेस्य कुतोबलम् ।
वने सिंहमदोन्मत्तो जम्बुकेन निपातितः ॥ १६ ॥

काचिन्ता मम जीवने यदि हरि र्विश्वंभरो गीयते
नो चेदर्भकीजवनाय जननीस्तन्यं कथं निःसरेत् ।
इत्यालोच्य मुहुर्मुहुर्यदुपते लक्ष्मीपते केवलम्
त्वत्पादांबुजसेवनेन सततं कालो मया नीयते ॥ १७

गीर्वाणवाणीषु विशिष्टबुद्धि
स्तथापि भाषांतरलोलुपोऽहम् ।
यथा सुराणाममृते च सेविते
स्वर्गाङ्गनानामधरासवे रुचिः ॥ १८ ॥

अन्नाद्दशगुणं पिष्टं पिष्टाद्दशगुणं पयः ।
पयसोऽष्टगुणं मांसं मांसाद्दशगुणं घृतम् ॥ १९ ॥
शाकेन रोगा वर्धंते पयसा वर्धते तनुः ।
घृतेन वर्धते वीर्यं मांसान्मांसं प्रवर्धते ॥ २० ॥

---

## एकादशोऽध्यायः ।

दातृत्वं प्रियवक्तृत्वं धीरत्व मुचितज्ञता ।
अभ्यासेन न लभ्यन्ते चत्वारः सहजा गुणाः ॥ १ ॥
आत्मवर्गं परित्यज्य परवर्गं समाश्रयेत् ।
स्वयमेव लयं याति यथा राज्य मधर्मतः ॥ २ ॥

हस्ती स्थूलतनुः स चांकुशवशः
किं हस्तिमात्रोऽङ्कुशो ?
दीपे प्रज्वलिते प्रणश्यति तमः
किं दीपमात्रं तमः ?

वज्रेणाभिहताः पतन्ति गिरयः
किं वज्रमात्रं नगाः ?
तेजो यस्य विराजते स बलवान्
स्थूलेषु कः प्रत्ययः ॥ ३ ॥

कलौ दशसहस्राणि हरि स्त्यजति मेदिनीम् ।
तदर्धं जाह्नवीतोयं तदर्धं ग्रामदेवता ॥ ४ ॥

गृहासक्तस्य नो विद्या नो दया मांसभोजिनः ।
द्रव्यलुब्धस्य नो सत्यं स्त्रैणस्य न पवित्रता ॥ ५ ॥

न दुर्जनः साधुदशामुपैति
बहुप्रकारैरपि शिक्षमाणः ।
आमूलसिक्तः पयसा घृतेन
न निम्बवृक्षो मधुरत्व मेति ॥ ६ ॥

अन्तर्गतमलो दुष्टस्तीर्थस्नानशतै रपि ।
न शुध्यति यथा भांडं सुराया दाहितञ्च तत् ॥ ७ ॥

न वेत्ति यो यस्य गुणप्रकर्षं
स तं सदा निन्दति नात्र चित्रम् ।
यथा किरातः करिकुम्भलब्धां
मुक्तां परित्यज्य बिभर्ति गुञ्जाम् ॥ ८ ॥

ये तु संवत्सरं पूर्णं नित्यं मौनेन भुञ्जते ।
युगकोटिसहस्रन्ते पूज्यन्ते स्वर्गविष्टपे ॥ ९ ॥

कामक्रोधौ तथा लोभं स्वादु शृङ्गारकौतुके ।
अतिनिद्रातिसेवे च विद्यार्थी ह्यष्ट वर्जयेत् ॥ १० ॥

अकृष्टफलमूलानि वनवासरतिः सदा ।
कुरुते ऽहरहः श्राद्धमृषि विप्रः स उच्यते ॥ ११ ॥

एकाहारेण संतुष्टः षट् कर्म निरतः सदा ।
ऋतुकालाभिगामी च स विप्रो द्विज उच्यते ॥ १२ ॥

लौकिके कर्मणि रतः पशूनां परिपालकः ।
वाणिज्यकृषिकर्मा यः स विप्रो वैश्य उच्यते ॥ १३ ॥

लाचादितैलनीलीनां कौसुम्भमपि सर्पिषाम् ।
विक्रेता मद्यमांसानां स विप्रः शूद्र उच्यते ॥ १४ ॥

परकार्यविहंता च दांभिकः स्वार्थसाधकः ।
छली द्वेषी मृदुः क्रूरो विप्रो मार्जार उच्यते ॥ १५ ॥

वापीकूपतडागाना मारामं सुरवेश्मनाम् ।
उच्छेदने निराशंकः स विप्रो म्लेच्छ उच्यते ॥ १६ ॥

देवद्रव्यं गुरुद्रव्यं परदाराभिमर्शनम्
निर्वाहः सर्वभूतेषु विप्र श्चांडाल उच्यते ॥ १७ ॥

देयं भोज्यधनं धनं सुकृतिभिर्नो संचयस्तस्य वै
श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता ।

अस्माकं मधुदानभोगरहितं नष्टं चिरात् संचितम्
निर्वाणादिति नेजपादयुगलं घर्षत्यहो मक्षिका: ॥ १८

---

## द्वादशोऽध्याय: ।

सानन्दं सदनं सुतास्तु सुधिय: कांता प्रियालापिनी
इच्छापूर्तिधनं स्वयोषिति रति: स्वाज्ञापरा: सेवका: ।
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधो: संगमुपासते च सततं धन्यो गृहस्थाश्रम: ॥ १

आर्तेषु विप्रेषु दयान्वितश्च
यच्छ्रद्धया स्वल्पमुपैति दानम् ।
अनंतपारं समुपैति राजन्
यद्दीयते तन्नलभेद् द्विजेभ्य: ॥ २ ॥

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने
प्रीति: साधुजने स्मय: खलजने विद्वज्जने चार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
इत्थं ये पुरुषा: कलासु कुशला स्तेष्वे व लोकस्थिति: ३

हस्तौ दानविवर्जितौ श्रुतिपुटौ सारस्वतद्रोहिणौ
नेत्रे साधुविलोकनेन रहिते पादौ न तीर्थं गतौ ।
अन्यायार्जितवित्तपूर्णमुदरं गर्वेण तुङ्गं शिरो
रे रे जम्बुक मुञ्च मुञ्च सहसा नीचं सुनिंद्यं वपुः ॥ ४

येषां श्रीमद्यशोदासुतपदकमले
नास्ति भक्ति र्नराणां
येषामभीरकन्याप्रियगुणकथने
नानुरक्ता रसज्ञा ।
येषां श्रीकृष्णलीला ललितरसकथा
सादरौ नैव कर्णौ ।
धिक् तान् धिक् तान् धिगेतान्
कथयति सततं कीर्तिनस्थो मृदंगः ॥ ५ ॥

पत्रं नैव यदा करीरविटपे दोषो वसंतस्य किन्
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
वर्षं नैव पतंति चातकमुखे मेघस्य किं दूषणम्
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥ ६

सत्संगाद्भवति हि साधुता खलानां
साधुनां नहि खलसंगतः खलत्वम् ।

आमोदं कुसुमभवं मृदेव धत्ते
मृद्गंधं नहि कुसुमानि धारयन्ति ॥ ७ ॥

सधुनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ८ ॥

विप्रास्मिन् नगरे महान् कथय कस्तालद्रुमाणां गणः
को दाता रजको ददाति वसनं प्रातर्गृहीत्वा निशि
को दक्षः परवित्तदारहरणे सर्वोऽपि दक्षोजनः
कस्माज्जीवसि हे सखे विषकृमिन्यायेन जीवाम्यहम् ९

न विप्रपादोदककर्दमानि
न वेदशास्त्रध्वनिगर्जितानि ।
स्वाहा स्वधाकारविवर्जितानि
श्मशानतुल्यानि गृहाणि तानि ॥ १० ॥

सत्यं माता पिता ज्ञानं धर्मो भ्राता दया सखा ।
शान्तिः पत्नी क्षमा पुत्रः षडेते मम बान्धवाः ॥ ११

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः ॥ १२ ॥
निमन्त्रणोत्सवो विप्रा गावो नवतृणोत्सवाः ।
पत्युत्साहयुता भार्या अहं कृष्ण रणोत्सवः ॥ १३ ॥

मातृवत् परदाराश्च परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ १४ ॥

धर्मे तत्परता मुखे मधुरता दाने समुत्साहता ।
मित्रेऽवंचकता गुरौ विनयता चित्तेऽतिगम्भीरता ।
आचारे शुचिता गुणे रसिकता शास्त्रेषु विज्ञातृता
रूपे सुन्दरता शिवे भजनता त्वय्यस्ति भो राघव ॥ १५
काष्ठं कल्पतरुः सुमेरुरचलश्चिन्तामणिः प्रस्तरः
सूर्यस्तीव्रकरः शशी क्षयकरः क्षारो हि वारांनिधिः ।
कामो नष्टतनु र्बलि र्दितिसुतो नित्यं पशुः कामगौः
नो तांस्ते तुलयामि भो रघुपते कस्योपमा दीयते १६

विद्या मित्रं प्रवासे च भार्य्या मित्रं गृहेषु च ।
व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ १७ ॥

विनयं राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम् ।
अनृतन्द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥ १८ ॥

अनालोक्य व्ययं कर्ता अनाथः कलहप्रियः ।
आतुरः सर्वक्षेत्रेषु नरः शीघ्रं विनश्यति ॥ १९ ॥

नाहारं चिन्तयेत्प्राज्ञो धर्म्ममेकं हि चिन्तयेत ।
आहारो हि मनुष्याणां जन्मना सह जायते ॥ २० ॥

धनधान्यप्रयोगेषु विद्यासङ्ग्रहणे तथा ।
आहारे व्यवहारे च त्यक्तलज्जा सुखी भवेत् ॥ २१ ॥
जलबिन्दुनिपातेन क्रमशः पूर्य्यते घटः ।
स हेतुः सर्वविद्यानां धर्म्मस्य च धनस्य च ॥ २२ ॥

---

## त्रयोदशोऽध्यायः ।

मुहूर्तमपि जीवेच्च नरः शुक्लेन कर्म्मणा ।
न कल्पमपि कष्टेन लोकद्वयविरोधिना ॥ १ ॥
गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् ।
वर्त्तमानेन कालेन प्रवर्तन्ते विचक्षणाः ॥ २ ॥
स्वभावेन हि तुष्यन्ति देवाः सत्पुरुषाः पिता ।
ज्ञातयः स्नानपानाभ्यां वाक्यदानेन पण्डिताः ॥ ३
आयुः कर्म्म च वित्तञ्च विद्या निधनमेव च ।
पञ्चैतानि च सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ४ ॥
अहोवत विचित्राणि चरितानि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते तद्भारेण नमन्ति च ॥ ५ ॥
यस्य स्नेहो भयं तस्य स्नेहो दुःखस्य भाजनम् ।
स्नेहमूलानि दुःखानि तानि त्यक्त्वा वसेत् सुखम् ॥६

अनागतविधाता च प्रत्युत्पन्नमतिस् तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ७ ॥

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजान मनुवर्तन्ते यथा राजा तथा प्रजा ॥ ८ ॥

जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम् ।
मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः ॥ ९ ॥

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १० ॥

दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना ।
अशक्ताः तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ ११ ॥

बन्धाय विषयासङ्गो मुक्तौ निर्विषयम्मनः ।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ १२ ॥

देहाभिमाने गलिते ज्ञानेन परमात्मनः ।
यत्र यत्र मनोयाति तत्र तत्र समाधयः ॥ १३ ॥
ईप्सितं मनसः सर्वं कस्य सम्पद्यते सुखम् ।
दैवायत्तं यतः सर्वं तस्मात्सन्तोषमाश्रयेत् ॥ १४ ॥

यथा धेनुसहस्रेषु वत्सो गच्छन्ति मातरम्
तथा यच्च कृतङ्कर्म कर्तार मनुगच्छति ॥ १५ ॥

अनवस्थितकार्य्यस्य न जने न बने सुखम् ।
जनो दहति संसर्गाद्वनं सङ्गविवर्जनात् ॥ १६ ॥
यथा खात्वा खनित्रेण भूतले वारि विन्दति ।
तथा गुरुगतां विद्यां शुश्रूषु रधिगच्छति ॥ १७ ॥
कर्मायत्तफलं पुंसां बुद्धिः कर्म्मानुसारिणी ।
तथापि सुधियश्चार्य्याः सुविचार्य्यैव कुर्वते ॥ १८ ॥
सन्तोष स्त्रिषु कर्तव्यः स्वदारे भोजने धने ।
त्रिषु चैव न कर्तव्योऽध्ययने जपदानयोः ॥ १९ ॥
एकाक्षरप्रदातारं यो गुरुं नाभिवन्दते ।
श्वानयोनिशतं भुक्त्वा चाण्डाले ष्वभिजायते ॥ २० ॥
युगान्ते प्रचलेन्मेरुः कल्पान्ते सप्त सागराः ।
साधवः प्रतिपन्नार्थान्न चलन्ति कदाचन ॥ २१ ॥

---

## चतुर्दशोऽध्यायः ।

पृथिव्यां त्रीणि रत्नानि जल मन्नं सुभाषितम् ।
मूढैः पाषाण खण्डेषु रत्नसंज्ञा विधीयते ॥ १ ॥
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ।
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ॥ २ ॥

पुनर्वित्तं पुनर्मित्रं पुनर्भार्य्या पुनर्मही ।
एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ ३ ॥

बहूनां चैव सत्वानां समवायो रिपुञ्जयः ।
वर्षाधाराधरो मेघः तृणैरपि निवार्य्यते ॥ ४ ॥

जले तैलं खले गुह्यं पात्रे दानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तु शक्तितः ॥ ५ ॥

धर्म्माख्याने श्मशाने च रोगिणां या मति र्भवेत् ।
सा सर्वदैवतिष्ठेच्चेत् कोन मुच्येत् बन्धनात् ॥ ६ ॥

उत्पन्नपश्चात्तापस्य बुद्धिर्भवति यादृशी ।
तादृशी यदि पूर्वंस्यात् कस्यनस्यान्महोदयः ॥ ७ ॥

दाने तपसि शौर्य्ये वा विज्ञाने विनये नये ।
विस्मयो नहि कर्तव्यो बहुरत्ना वसुन्धरा ॥ ८ ॥

दूरस्थोऽपि न दूरस्थो यो यस्य मनसि स्थितः ।
यो यस्य हृदयेनास्ति समीपस्थोऽपि दूरतः ॥ ९ ॥

यस्माच्च प्रिय मिच्छेत्तु तस्य ब्रूयात्सदाप्रियम् ।
व्याधो मृगवधं गन्तुं गीतं गायंति सुस्वरम् ॥ १० ॥

अत्यासन्ना विनाशाय दूरस्था न फलप्रदाः ।
सेव्यतां मध्यभागेन राजा वन्हि र्गुरुः स्त्रियः ॥ ११ ॥

अग्निराप: स्त्रियोमूर्ख: सर्पोराजकुलानि च ।
नित्यं यत्नेन सेव्यानि सद्य: प्राणहराणि षट् ॥ १२ ॥
स जीवति गुणा यस्य यस्य धर्म्म: स जीवति ।
गुण धर्म्म विहीनस्य जीवितं निष्प्रयोजनम् ॥ १३ ॥
यदीच्छसि वशीकर्त्तुं जगदेकेन कर्म्मणा ।
पुरा पञ्चदशास्येभ्यो गां चरन्तीं निवारय ॥ १४ ॥
प्रस्तावसदृशं वाक्यं प्रभावसदृशं प्रियम् ।
आत्मशक्तिसम ङ्कोपं योजानाति स पण्डित: ॥ १५ ॥
एक एव पदार्थस्तुत्रिधा भवति वीक्षित: ।
कुणप: कामिनी मांसं योगिभि: कामिभि: श्वभि: १६
सुसिद्ध मौष ध न्धर्म्मं गृहच्छिद्रञ्च मैथुनम् ।
कुभुक्तं कुश्रुतं चैव मतिमान् न प्रकाशयेत् ॥ १६ ॥
तावन्मौनेन नीयन्ते कोकिलै श्चैववासरा: ।
यावत्सर्वंजनानन्ददायिनी वाक् प्रवर्तते ॥ १८ ॥
धर्म्मं धनञ्च धान्यञ्च गुरोर्वचन मौषधम् ।
सुगृहीतञ्च कर्त्तव्य मन्यथा तु न जीवति ॥ १९ ॥
त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्य महोरात्रं स्मर नित्य मनित्यत: ॥ २० ॥

---

## पञ्चदशोऽध्यायः ।

यस्य चित्त न्द्रवीभूतं कृपया सर्वजन्तुषु ।
तस्य ज्ञानेन मोक्षेण किं जटा भस्म लेपनैः ॥ १ ॥

एक मेवाक्षरं यस्तु गुरुः शिष्यं प्रबोधयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वाचा न्टणीभवेत् ॥ २ ॥

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया ।
उपानन्मु खभङ्गो वा दूरतो वा विसर्जनम् ॥ ३ ॥

कुचैलिन न्दन्तमलोपधारिणं
वह्वाशिनं निष्ठुरभाषिणञ्च ।
सूर्योदये चास्तमिते शयानम्
विमुञ्चति श्री र्यदि चक्रपाणिः ॥ ४ ॥

त्यजन्ति मित्राणि धनै र्विहीनं
दाराश्च भृत्याश्च सुहृज्जनाश्च ।
तं चार्थवंतं पुन राश्रयन्ते
ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ ५ ॥

अन्यायोपार्जितं द्रव्यं दश वर्षाणि तिष्ठति ।
प्राप्त एकादशे वर्षे समूलञ्च विनश्यति ॥ ६ ॥

अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् ।
अमृतं राहवे मृत्यु, विषं शङ्करभूषणम् ॥ ७ ॥

तद्भोजनं यद् द्विज भुक्तशेषं
तत् सौहृदं यत् क्रियते परस्मिन्
सा प्राज्ञता या न करोति पापं
दम्भं बिना यः क्रियते स धर्म्मः ॥ ८ ॥

मणिर्लुण्ठति पादाग्रे काचः शिरसि धार्य्यते ।
क्रय विक्रय वेलायां काचः काचो मणिर्म्मणिः ॥ ९ ॥

अनन्तशास्त्रं बहुलाश्च विद्याः
अल्पश्च कालो बहुविघ्नता च ।
यत् सारभूतं तदुपासनीयं हंसो
यथा क्षीर मिवांबुमध्यात् ॥ १० ॥

दूरागतं पथि श्रान्तं वृथा च गृहमागतम् ।
अनर्चयित्वा यो भुंक्ते स वै चाण्डाल उच्यते ॥ ११ ॥

पठन्ति चतुरो वेदान् धर्म्मशास्त्राण्यनेकशः ।
आत्मानं नैव जानन्ति दर्वीपाकरसं यथा ॥ १२ ॥

धन्या द्विजमयी नौका विपरीता भवार्णवे ।
तरंत्यधोगताः सर्वे उपरिस्थाः पतन्त्यधः ॥ १३ ॥

अथ अमृतनिधानं नायकोऽप्योषधीना ममृता
मयशरीरः कान्तियुक्तोऽपि चन्द्रः भवति
विगतरश्मि मण्डलं प्राप्य भानोः पर
सदन निविष्टः को लघुत्वं न याति ॥ १४ ॥

अलिरयं नलिनीदलमध्यगः
कमलिनीमकरन्दमदालसः ।
विधिवशात् परदेश मुपागतः
कुटज पुष्प रसं बहु मन्यते ॥ १५ ॥

पीतः क्रुद्धेन तातश्चरणतलहतो
वल्लभो येन रोषा
दावाल्याद्विप्रवर्यैः स्ववदन
विवरे धार्य्यते वैरिणी मे ।
गेहं मे छेदयन्ति प्रतिदिवस
मुमाकान्तपूजानिमित्तं
तस्मात् खिन्ना सदाहं द्विज कुल
निलयं नाथ्य युक्तं त्यजामि ॥ १६ ॥

बन्धनानि खलु सन्ति बहूनि
प्रेमरज्जुकृतबन्धन मन्यत् ।

दारुभेदनिपुणोऽपि षडङ्घ्रि
निष्क्रियो भवति पङ्कजकोशे ॥ १७ ॥

छिन्नोऽपि चन्दनतरु र्न जहाति गन्धं
वृद्धोऽपि वारणपति र्न जहाति लीलाम् ।
यन्त्रार्पितो मधुरतां न जहाति चेक्षुः
क्षीणोऽपि न त्यजति शीलगुणान् कुलीनः ॥ १८

उवरीकोऽपि महीधरो लघु
तरो दोर्भ्यां धृतोलीलया
तेन त्वं दिवि भूतले च
सततं गोवर्द्धनो गीयसे ।
त्वां त्रैलोक्यधरं वहामि
कुचयोरग्रे न तद्गण्यते
किम्वा केशव भाषणेन
बहुना पुण्यैर्यशोलभ्यते ॥ १९ ॥

---

## षोडशोऽध्यायः ।

न ध्यातं पदमीश्वरस्य विधिवत् संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुः धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगुलं स्वप्नेऽपि नालिङ्गितं ।
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ १ ॥

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिंतयन्त्यन्यं न स्त्रीणामेकतोरतिः ॥ २ ॥

यो मोहान्मन्यते मूढो रक्तेयं मयि कामिनी ।
स तस्या वशगो भूत्वा नृत्येत् क्रीडाशकुन्तवत् ॥ ३

कोऽर्थान् प्राप्य न गर्वितो,
विषयिणः कस्यापदोऽ स्तङ्गताः ?
स्त्रीभिः कस्य न खण्डितम् भुवि मनः
को नाम राजप्रियः ?
कः कालस्य न गोचरत्त्व मगमत्
कोऽर्थी गतो गौरवम् ?
को वा दुर्जनदुर्गुणेषु पतितः
क्षेमेण यातः पथि ॥ ४ ॥

न निर्मिता केन न दृष्टपूर्वा
न श्रूयते हेममयी कुरङ्गी।
तथाऽपि तृष्णा रघुनन्दनस्य
विनाशकाले विपरीतबुद्धिः ॥ ५ ॥

...समतां यांति नोच्चैरासनसंस्थिताः।
...शिखरस्थोऽपि काकः किङ्गरुडायते ॥ ६ ॥
...सर्वत्र पूज्यन्ते न महत्योऽपि सम्पदः ॥
...किं तथा वन्द्यो निष्कलङ्को यथा कृशः ॥ ७ ॥
...तगुणो यस्तु निर्गुणोऽपि गुणी भवेत्।
...पि लघुतां याति स्वयम्प्रख्यापितैर्गुणैः ॥ ८ ॥
...जन मनुप्राप्ता गुणा यान्ति मनोज्ञताम्।
... रत्न माभाति चामीकरनियोजितम् ॥ ९ ॥
...सर्वज्ञतुल्योऽपि सीदत्येको निराश्रयः।
...मपि माणिक्यं हेमाश्रय मपेक्षते ॥ १० ॥
...शेन ये अर्था धर्मस्यातिक्रमेण तु।
... प्रणिपातेन ते अर्था मा भवन्तु मे ॥ ११ ॥
...या क्रियते लज्जया या वधूरिव केवलाङ्गी
...वेश्येव सामान्या पथिकैरपि भुज्यते ॥ १२ ॥

धनेषु जीवतव्ये च स्त्रीषु चाहारकर्मसु ।
अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च ॥ १३

क्षीयन्ते सर्वदानानि यज्ञहोमबलिक्रियाः ।
नक्षीयते पात्रदानमभयं सर्वदेहिनाम् ॥ १४ ॥

तृणं लघु तृणात्तूलं तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं याचयिष्यति ॥ १५

वरंप्राणपरित्यागो मानभङ्गेन जीवनात् ।
प्राणत्यागे क्षणं दुःखं मानभङ्गे दिने दिने ॥ १६ ॥

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात् तदेव वक्तव्यं वचने का दरिद्रता ॥ १७ ॥

संसारकटुवृक्षस्य द्वे फले अमृतोपमे ।
सुभाषितरसास्वादः संगतिः सुजने जने ॥ १८ ॥

बहुजन्मसु चाभ्यस्तं दानमध्ययनं तपः ।
तेनैवाभ्यासयोगेन देही चाभ्यसते पुनः ॥ १९ ॥

पुस्तकेषु च या विद्या परहस्तेषु यद्धनम् ।
उत्पन्नेषु च कार्येषु न सा विद्या न तद्धनम् ॥ २० ॥

---

## सप्तदशोऽध्यायः ।

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
सभामध्ये नशोभन्ते जारगर्भा इव स्त्रियः ॥ १ ॥

कृते प्रतिकृतिं कुर्य्याद्धिंसने प्रतिहिंसनम् ।
तत्र दोषो न पतति दुष्टे दुष्टं समाचरेत् ॥ २ ॥

यद्दूरं यद् दुराराध्यं यच्च दूरे व्यवस्थितम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ ३ ॥

लोभश्चेदगुणेन किं पिशुनता
यद्यस्ति किम्पातकैः
सत्यं चेत्तपसा च किं शुचि मनो
यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं गुणैः सुमहिमा
यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो
यद्यस्ति किं मृत्युना ॥ ४ ॥

पिता रत्नाकरो यस्य लक्ष्मी र्यस्य सहोदरी ।
शङ्खो भिक्षाटनं कुर्य्यान्नादत्त मुपतिष्ठते ॥ ५ ॥

अशक्तस्तु भवेत्साधुर्ब्रह्मचारी च निर्धनः ।
व्याधिष्टो देवभक्तश्च वृद्धा नारी पतिव्रता ॥ ६ ॥

नान्नोदकसमं दानं न तिथि र्द्वादशी समा ।
न गायत्र्याः परो मन्त्रो न मातु र्दैवतं परम् ॥ ७ ॥

तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः ।
वृश्चिकस्य विषं पुच्छे सर्वांगे दुर्जनो विषी ॥ ८ ॥

पत्युराज्ञां विना नारी उपोष्य व्रतचारिणी ।
आयुराहरते भर्तुः सा नारी नरकं व्रजेत् ॥ ९ ॥

न दानैः शुध्यते नारी नोपवासशतैरपि ।
न तीर्थसेवया तद्वद्भर्तुः पादोदकैर्यथा ॥ १० ॥

पादशेषं पीतशेषं सन्ध्याशेषं तथैव च ।
श्वानमूत्रसमं तोयं पीत्वा चान्द्रायणञ्चरेत् ॥ ११ ॥

दानेन पाणिर्नतु कङ्कणेन,
स्नानेन शुद्धिर्नतु चन्दनेन ।
मानेन तृप्तिर्नतु भोजनेन,
ज्ञानेन मुक्ति र्न तु मण्डनेन ॥ १२ ॥

नापितस्य गृहे क्षौरम्पाषाणे गन्धलेपनम् ।
आत्मरूपञ्जले पश्यन् शक्रस्यापि श्रियं हरेत् ॥ १३ ॥

सद्यः प्रज्ञाहरा तुण्डी सद्यः प्रज्ञाकरी वचा ।
सद्यः शक्तिहरा नारी सद्यः शक्तिकरं पयः ॥ १४ ॥

यदि रामा यदि च रमा
यदि तनयो विनयगुणो गुणोपेतः ।
तनये सुसुतोत्पत्तिः
सुरवरनगरे किमाधिक्यम् ॥ १५ ॥

परोपकरणं येषां जागर्ति हृदये सताम् ।
नश्यन्ति विपदस्तेषां सम्पदः स्युः पदे पदे ॥ १६ ॥

आहार निद्रा भय मैथुनानि
समानि चैतानि नृणां पशूनाम् ।
ज्ञानं नराणा मधिको विशेषो
ज्ञानेन हीनाः पशुभिः समानाः ॥ १७ ॥

दानार्थिनो मधुकरा यदि कर्णतालै
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुन र्विकचपद्मवने वसन्ति ॥ १८ ॥

राजा वेश्या यमश्चाग्निस्तस्करो बाल याचकौ ।
परदुःख न जानन्ति अष्टमो ग्रामकण्टकः ॥ १९ ॥

अधः पश्यसि किम्बाले पतितन्तव किं भुवि ।
रे रे मूर्ख न जानासि गतन्तारुण्यमौक्तिकम् ॥ २० ॥

वंशालाम्रयापि विफलापि सकण्टकापि
बक्रापि पंकिलभवापि दुरासदापि ।
गन्धेन बन्धु रसि केतकि सर्वजन्तो
रेको गुणः खलु निहन्ति समस्तदोषान् ॥ २१ ॥

इति समाप्तम् ।

---

